नमामो वयं मातृभूः पुण्यभूस्त्वां
नमामो वयं मातृभूः पुण्यभूस्त्वां
त्वया वर्धिताः संस्कृतास्त्वत्सुताः
अये वत्सले मङ्गले हिन्दुभूमे
स्वयं जीवितान्यर्पयामस्त्वयि ॥ १॥

नमो विश्वशक्त्यै नमस्ते नमस्ते
त्वया निर्मितं हिन्दुराष्ट्रं महत्
प्रसादात्तवैवात्र सज्जाः समेत्य
समालम्बितुं दिव्यमार्गं वयम् ॥ २॥

समुन्नामितं येन राष्ट्रं न एतत्
पुरो यस्य नम्रं समग्रं जगत्
तदादर्शयुक्तं पवित्रं सतीत्वं
प्रियाभ्यः सुताभ्यः प्रयच्छाम्ब ते ॥ ३॥

समुत्पादयास्मासु शक्तिं सुदिव्यां
दुराचार-दुर्वृत्ति-विध्वंसिनीं
पिता-पुत्र-भ्रातृंश्च भर्तारमेवं
सुमार्गं प्रति प्रेरयन्तीमिह ॥ ४॥

सुशीलाः सुधीराः समर्थाः समेताः
स्वधर्मे स्वमार्गे परं श्रद्धया
वयं भावि-तेजस्वि-राष्ट्रस्य धन्याः
जनन्यो भवेमेति देह्याशिषम् ॥ ५॥

भारतमाता की जय ॥